# THE VIKRAMORVAS'ÎYA

OF

# KÂLIDÂSA

WITH

The Commentary (Prakâs'ikâ)

OF

RANGANÂTHA.

EDITED BY

KÂS'ÎNÂTH PÂṆDURANG PARAB.

Second Revised Edition.

PRINTED AND PUBLISHED

BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR OF JÂVAJÎ DÂDÂJÎ'S "NIRṆAYA-SÂGAR" PRESS

Bombay.

1897.

*Price 12 Annas.*

हाकविश्रीकालिदासविरचितं

# विक्रमोर्वशीयम्

रङ्गनाथकृतप्रकाशिकया समेतम् ।

## ीनाथ पाण्डुरङ्ग परब

इत्यनेन संस्कृतम् ।



द्वितीयं संस्करणम् ।


PRI तच्च

शाके १८१९ वत्सरे

मुम्बय्यां

ख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा

प्राकाश्यं नीतम् ।

मूल्यं रूप्यकपादत्रयम् ।

१८८८ मध्यें

॥ श्रीः ॥

विश्रीकालिदासविर्रा **मोर्वशीयम् ।**
कांहीं वर्षांमागें
टिकें सटीक

कूल नसल्या
सुमारें ाहुरेकपुरुषं व्याप्य स्थितं रोदसी
प्रसाद ीश्वर इत्यनन्यविषयः शब्दो यथार्थाक्षरः ।
आग्र मुमुक्षुभिर्नियमितप्राणादिभिर्मृग्यते
जीं स्थाणुः स्थिरभक्तियोगसुलभो निःश्रेयसायास्तु वः ॥ १ ॥

---

गण्डसिन्दूरमार्तण्डखण्डितायतमश्चयः ।
शुण्डोत्क्षिप्तारिवृक्षोऽसौ रक्षताद्गणनायकः ॥

दलत्पद्मपत्रप्रकाशाक्षि लक्ष्मि त्वदङ्घ्रिद्वयाम्भोजभृङ्गायितं मे ।
मनः स्तान्निरस्तावमस्तातिदुष्टे समस्तात्मरूपे नमस्तेऽस्त्वजस्रम् ॥

अञ्जनानन्दनानन्ददायिनं रघुनन्दनम् ।
वन्दारुजनमन्दारं दशास्यदमनं भजे ॥

नीलोत्पलानुकारी नारीकुललम्पटः कोऽपि ।
गोकुलपरिसरचारी गिरिवरधारी हरिः पायात् ॥

मौलौ मन्दारमाला जयति भगवती जाह्नवी पुण्डरीक-
स्रग्वैधी मुण्डराजी हिमकरकलया चाग्निना भालशोभा ।
यस्याङ्गे नागभूषा प्रविलसति चिताभस्मना चाङ्गरागो
देवोऽयं वामदेवो भवतु भवि(वु)ककृन्नाट्यसृष्टिप्रवीणः ॥

श्रीबालकृष्णपितरं विद्वद्वृन्दशिरोमणिम् ।
नत्वा नारायणाख्यं च पितृव्यं विबुधोत्तमम् ॥
श्रीकालिदासरचितत्रोटकस्य यथामति ।
रङ्गनाथेन विदुषा व्याख्या विख्यापयिष्यते ॥
यदत्र मोहतः किंचिद्विच्युतं स(तद्)बुधोत्तमैः ।
परोपकाररसिकैः संशोध्यं शुद्धमानसैः ॥

…गरिप्सितग्रन्थस्य निष्प्रत्यूहसमाप्तिकामनया मङ्गलं मनस्यनुसंदधत्, अन्या-
…यमानपानीयभृतकुम्भस्येव सूत्रधार छायाआ(?) नान्द्या मङ्गलत्वमभिसं-
…. नान्दीमवतारयति—वेदान्तेष्विति । स स्थाणुः शिवो वः सामा-

जिकानां निःश्रेयसाय मोक्षायास्तु । चतुर्थ्या निमित्त
निमित्तमस्त्वित्यर्थः । मोक्षं ददात्विति यावत् । 'तुमर्थ
निःश्रेयसं दातुमस्त्वित्यर्थः । 'स्थाणुः कीले हरौ' ई
स्थाणुपदस्य प्रवृत्तिनिमित्तप्रदर्शनं च—'ततः प्रभृति व
(न प्रसूते) शुभाः प्रजाः । स्थाणुवन्निश्चलो यस्मात्स्थितः
इति पुराणेषु। शिवस्य मोक्षहेतुत्वं च—'स एव मोक्षस्थितिन
श्वतरे । 'नमो भवस्य हेत्यै' इति च तैत्तिरीये । 'तदेतत्सकलं
श्वाधिकः शिवः । स एव जगतां नाथः स तु संसारमोचकः ॥' इ
अन्यत्र च बहुषु स्थलेषु सुप्रतीतमेव । ननु यदि स स्वभाव एव त
मिति स लोकैः सेव्यत इत्याशङ्कयाह—स्थिरेति । स्थिरो विषयादिना
क्तियोगो भक्तिप्राप्तिः, तया सुलभः सुप्राप्यः । 'आराध्यत्वेन ज्ञानं भ
दयनाचार्याः । शिवस्य भक्तिप्राप्यत्वं प्रतीतम् । 'भावग्राह्यमनीडाख्यं
वकरं शिवम् ।' इति श्वेताश्वतरे । भक्तियोगेत्यनेन हरे भक्तिरपि पूर्वपूर्वा
र्जितसातिशयसुकृतसंभारतो भवतीति ध्वनितम् । यद्वा स्थिरा भक्तिः
ध्यानं च, ताभ्यां सुलभः । स्थिरभक्तिपूर्वकध्यानैकगम्य इत्यर्थः । ध्यानग
मप्युक्तं कैवल्योपनिषदि—'श्रद्धाभक्तिध्यानयोगादवेहि' इति । श्रद्धाभ
दश्चाचार्यैरुक्तः—'वेदबोधितफलावश्यंभावनिश्चयः श्रद्धा' इति । योग
चोक्तं कठवल्ल्याम्—'यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह । बुद्धिश्च न
ति(न्ती) तामाहुः परमां गतिम् । तां योगमिति [मन्यन्ते स्थिरामिन्द्रिय
णाम् ॥' इति] । स क इत्यपेक्षायामाह—वेदान्तेष्वित्यादि वाक्यत्रयम् ।
न्तेषूपनिषत्सु यमेकपुरुषमाहुः । तत्त्वविद इत्यर्थात् । नन्वेकादश रुद्राः सन्ति
त्किमेकस्य सेवनेन मुक्तिरुत सर्वेषाम् । आद्ये कारणानिर्णयेन कार्यस्यासं
द्वितीये तु सर्वेषामेकदासेवनासंभव इति दूरापास्तम्, तस्मान्मुक्तिरूपं फले
चेत्तत्राह—एकेति । एकत्वं चोक्तमथर्वशिरोपनिषदि—'स एको य ए
रुद्रो यो रुद्रः स ईशानो य ईशानः स भगवान्महेश्वरः' इति । 'एक एव रु
द्वितीयाय तस्थे' इत्यादि तैत्तिरीयेऽपि । तथा चैकादशत्वप्रवादस्तु प्रापञ्चि
ज्ञानमार्गे तु स एक एव, तस्य च सूपपन्नमेव सेवनेन मुक्तिदातृत्वमिति ।
पुरुषमिति । निखिलभक्ताखिलकामनापूरणसमर्थमित्यर्थः । पुरुषत्वं चास्य—
वै रुद्रः सन्महो [नमो] नमः । वृक्ष इव स्तब्धो दिवि तिष्ठत्येकः । तेनेदं पूर्णं पु
सर्वम् ।' इत्यादि तैत्तिरीये । 'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मन
परा बुद्धिर्बुद्धेरात्मा महान्परः ॥ महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषा
किंचित्सा काष्ठा सा परा गतिः ॥' इति । 'अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूम
ईशानो भूतभव्यस्य स एवाद्य स उश्वः । एतद्वैतत्' इत्यादि च कठवल्ल्याम् ।

# १८८८ मध्यें छापलेल्या पहिल्या आवृत्तीचीं प्रस्तावना.



विश्रीकालिदासविरचित अभिज्ञानशाकुन्तल नाटक राघवभट्टकृत आ कांहीं वर्षांमागें आम्हीं छापून प्रसिद्ध केलें, त्या वेळेस त्या व इतर नाटकें सटीक छापून काढावीं हा आमचा मानस होता. पण तशीं नुकूल नसल्याकारणानें आजपर्यंत आम्हांस तत्संबन्धानें कांहींच करतां हीं. सुमारें दोन वर्षांमागें आमचे जयपुरकर मित्र महामहोपाध्याय र्गाप्रसाद यांनीं विक्रमोर्वशीवरील रङ्गनाथकृत टीकेची एक हस्त- त आम्हांस पाठवून दिली. ही प्रत संवत् १७४५ माघ कृष्ण अ- ोजीं लिहिलेली आहे, तेव्हां आज ह्या पोथीला बरोबर २०० वर्षें गें. या पोथीच्या लेखकानें—त्यास संस्कृत न समजल्यामुळें म्हणा, ाळजीपणामुळें म्हणा—कित्येक ठिकाणीं भलभलत्याच हस्तदोषांच्या ा आहेत, तरी ज्या पोथीवरून ही प्रत उतरून घेतलेली आहे ती द्ध असल्याकारणानें हींत अशुद्धें फारच थोडीं राहिलीं आहेत. व शुद्ध वाचतां येतात. क्वचित् पङ्क्ति सुटल्या आहेत त्यास प्रत्यन्तरा- पाय नाहीं. दुसरी एखादी पोथी मिळेल या आशेनें आज २ वर्षें ली, व ठिकठिकाणीं चौकशीही केली, परंतु प्रत्यन्तर मिळालें नाहीं. मिळत नाहीं म्हणून मिळालेली प्रतही गुप्त ठेवावी ही गोष्ट आम्हांस टेना; म्हणून याच एका पोथीवरून ही टीका छापली आहे. पुढें मिळाल्यास ती सुधारून घेतां येईल.

ाटकाचा कर्ता कालिदास. हा कवि कोणत्या काळीं झाला याविषयीं तभेद आहेत. ख्रिस्तीशकापूर्वीचें शतक, ख्रिस्तीशकानन्तरचें दुसरें हावें शतक वगैरे अनेक काळ या कवीविषयीं विचार करतांना ीं सुचविले आहेत, परंतु निश्चयात्मक असा एकही काळ या कवीचा रला नाहीं.

कार रङ्गनाथ याविषयींची जी काय माहिती मिळते ती त्याच्या या या टीकेच्या आरम्भीं मङ्गलाचरणांत व अन्तीं उपसंहारांत टी- ं स्वतःविषयीं जे उल्लेख केले आहेत, त्यांवरून या टीकाकाराचा निनामक कुळांत झाला, याचे कुळाचें आराध्य दैवत रामचन्द्र, श्रिम्बेकर (शेंबेकर), पणज्याचें नांव तानभट्ट, आज्याचें रङ्गनाथ, नारायण, पित्याचें बालकृष्ण, वडील बन्धूचें वेणीमाधव, आणि

---

नारायणाच्या उत्तररामचरित व विद्धशालभञ्जिका नाटकांवर टीका आहेत.

पुत्राचें बालकृष्ण होतें असें कळतें. चुलता नारायण व बाप बा
मोठे विद्वान् होते असें टीकाकार म्हणतो. रङ्गनाथानें ही टीका क
संवत् १७१२ म्हणजे शा० श० १५७७ श्रावण वद्य ५ रविवार
नक्षत्र वृद्धियोग या दिवशीं समाप्त केली. ती पुढें ५ वर्षांनीं म्हण
१७१७ मध्यें त्याचा पुत्र बालकृष्ण यानें लिहून प्रसिद्ध केली.

## रङ्गनाथाचा वंशवृक्ष.




रङ्गनाथाच्या टीकेंत आढळणारीं

**ग्रन्थकारांचीं नांवें**—आचार्य (शंकर?) उदयनाचार्य, क
काव्यप्रकाशकार, क्षीरस्वामी, चाणक्य, जोतिरीश्वर, धनिक, नाट्यल
पाराशर, पिङ्गल, भरत, मातृगुप्ताचार्य, याज्ञवल्क्य, वाग्भट, वि
विराज, श्रीधरसेन, संगीतकल्पतरुकार, सागर, हरदत्त.

**ग्रन्थांचीं नांवें**—अथर्वशिखा, अथर्वशिरोपनिषद्, अने
अमरकोष, एकाक्षरकोष, कठवल्ली, कैवल्योपनिषद्, कौर्मपुराण,
ग्योपनिषद्, तैत्तिरीय, त्रिकाण्डीकोष, त्रिकाण्डीशेषकोष, दशरूपक
णिविरचितदशरूपकटीका, देवीपुराण, धरणिकोष, नाट्यदर्पण,
(योगशास्त्र), ब्रह्माण्डपुराण, भविष्योत्तरपुराण, भारत, भावप्रकाश
शास्त्र), मुक्तावलीकोष, रूपचिन्तामणिकोष, वराहसंहिता, वा
विश्वकोष, विश्वलोचनकोष, विषतन्त्र (वाग्भटे) विष्णुपुराण,
कोष, शैवपुराण, संगीतरत्नाकर, साहित्यदर्पण, स्कान्द (स्कन्दपुराण
युधकोष, हेमचन्द्रकोष.

---

## या आवृत्तीची सूचना.

पहिली आवृत्ति संपल्यामुळें ही दुसरी आवृत्ति छापिली आहे
प्रत्यन्तर अद्यापपर्यन्त आम्हांस मिळालें नाहीं म्हणून ही आवृत्ति
छापणें आम्हांस भाग पडलें, यास आमचा इलाज नाहीं.

---

,रुषदैवत्य–' इत्यथर्वशिखायाम् । इत्यादिषु बहुषु वेदान्तेषु दृष्टम् । वेदा-
। चोपलक्षणं पुराणादिष्वपि द्रष्टव्यम् । यथा श्रीकौर्मे श्वेताश्वतरोपबृंहणे—
तास्ते परमेशभक्त्या तदन्तरे देवमशेषहेतुम् । पश्यन्ति शंभुं कविमीशि-
बृहन्तं पुरुषं पुराणम् ॥' इति । तथा स्कान्दे शंकरसंहितायामुपदेश
-'इदं सदैव सौम्याग्रे यदीयं लक्षणा श्रुतिः । मह एवेति तद्ब्रह्मपुरुषः स-
ः ॥' इति । भारत आनुशासनिके पर्वणि—'ततः स भगवानीशः सर्व-
.व्ययः । सर्वतत्त्वविधानज्ञः प्रधानपुरुषेश्वरः ॥' इति । तथा सूतसंहितायां
ायाम्— 'इन्द्रिय–' इत्यारभ्य 'पुरुषो नाम संपूर्णः शिवः सत्यादिल न-
ाम्बमूर्तिधरो नान्यो रुद्रो विष्णुरजोऽपि च ॥' इत्यादिनोक्तम् । वेदान्ते त ।
त्र तदाह—सकलप्रमाणेषु मूर्धन्यं प्रमाणं श्रुतिः, तल्लाभे किं प्रमाणान्तर य-
ते । उत्कर्षकं विशेष[ण]माह—व्याप्येति । रोदसी द्यावापृथिव्यौ व्याप्य नः ।
रोदसीति रोदःशब्दस्य सान्तस्य द्विवचनम् । 'भूद्यावौ रोदस्यौ रोदसी तदा-
इत्यमरः । सान्ते 'रोदः क्लीबे रोदसी स्त्री दिवि भूमौ पृथक्पृथक् । सहो-
योरेतौ रोदस्यौ [रोदसी] तथा ॥' इति रूपचिन्तामणिश्च । शिवस्य
मुक्तमथर्वशिरोपनिषदि—'स ओंकारो य ओंकारः । स प्रणवो यः
स सर्वव्यापी यः सर्वव्यापी ।' इति । 'व्यापको हि भगवान्रुद्रः शंभो' त च
'व्यापनाद्व्यापी महादेवः' इत्यथर्वशिखायाम् । 'सर्वाननशिरोग्रीवः
शिरोरुहः । सर्वव्यापी स भगवांस्तस्मात्सर्वगतः शिवः ॥' इति श्वे-
। तैत्तिरीये च—'यो रुद्रो अग्नौ यो अप्सु य ओषधीषु । यो रुद्रो
ना विवेश । तस्मै रुद्राय नमो अस्तु ।' इत्यादौ । यस्मिन्निति । य-
भ)वे ईश्वर इति शब्दोऽनन्यविषय एतन्मात्रवाचकः । यथार्थाक्षरः ।
त्यर्थः । ईश्वरत्वं चास्य सकलश्रुतिसिद्धम् । तथा हि—'ईशानः सर्वभू-
रः' इत्यादि तैत्तिरीये । श्वेताश्वतरेऽपि—'तमीश्वराणां परमं महेश्वरं तं
परमं च दैवतम् । पतिं यतीनां परमं पुरस्ताद्विदाम देवं भुवनेशमी-
।' इति । 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः' इति
। तथा भारते हरिवंशे कृष्णवचनम्—'यस्मादीशो महतामीश्वराणां
प्रीतिदः प्राणदश्च । तस्माद्धि त्वामीश्वरं प्राहुरीशं सन्तो विद्वांसः सर्व-
वेज्ञाः ॥' इति । इत्यादि ईश्वरशब्दस्य शिवमात्रवाचकत्वं तैत्तिरीयादौ
श । तदनुसारिणः श्रीहरदत्तचरणा अप्याहुः—'नानीश्वरं भवितुमर्हति
द्वीश्वरं च नितरामयथाप्रमाणम् । तल्लोकवेदविदितेश्वरवर्जनेन कोऽयं
तेचिदीश्वरमन्यमाहुः ॥ मात्रार्थवादविधिभिर्बहुभिर्विभक्तो यः शब्दरा-
ततया प्रमाणम् । सोऽयं विमत्सरविमृष्टपदार्थतत्त्वो वेदः प्रकाशयति केव-
वाम् ॥ शब्दोऽयमीश्वर इति श्रुतिगोचरः सन्नानीलकण्ठमवतंसितचन्द्रले-

खम् । त्वामेव बोधयति नाथ निजार्थपोपादन्यं पुनः प्रकरणादिनिपी वा
[इति ।] यथार्थाक्षरत्वं निरतिशयैश्वर्यशालित्वात् । ईष्ट इतीश्वरः । ' क
स–' इति वरच् । सर्वव्यापित्वाद्वा अश्नुत इतीश्वरः । 'अश्नोतेः' इत्यनेन औ गार
वरट्, उपधाया ईत्वं च । अन्तरिति । चः पूर्वेण सह समुच्चयार्थः । यो नि हण
प्राणादयः प्राणापानसमानव्यानोदानाख्या वायवो यैरेतादृशैर्मुमुक्षुभिर
मृग्यतेऽन्विष्यते । तथा च छान्दोग्ये दहरोपासनायाम्—'अथ यदिद
ह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशः । तस्मिन्यदन्त
व्यं यद्वावजिज्ञासितव्यम् ।' इत्यारभ्य 'एतत्सत्यं ब्रह्मपुरमस्मिन्काम
ताः । एष आत्मा अपहतपाप्मा विरजो विमृत्युर्विशोको विचिकित्सो
त्यकामः सत्यसंकल्पः ।' इति । कैवल्येऽपि—'हृत्पुण्डरीकं विरजं···
ध्ये विशदं विशोकम् । अचिन्त्यमव्यक्तमनन्तरूपं शिवं प्रशान्तममृतं
निम् ॥' इति । 'दहरं विपाप्मं परवेश्मभूतं हृत्पुण्डरीकं पुरमध्यसंस्थम्
दहं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यम् ॥' इति तैत्तिरीये । त
एकादशरुद्रसंहितायाम्—'दहरं विपाप्मं परमेश्वरस्य यद्वेश्मभूतं सकलं
तत्र श्रदहं गगनं विशोकं तदेव नित्यं सकलैरुपास्यम् ॥' इति । पुरुषस्
गणमु[illegible]ज्ञवल्क्येन— 'अथैकं परमात्मानं परमानन्दविग्रहम् । गुरूपदे
पुरुषं कृष्णपिङ्गलम् ॥ ब्रह्म ब्रह्मपुरेर्गागि(मार्गे) दहराब्जे खमध्ये
अभ्यासात्तं प्रपश्यन्ति सन्तस्त्वं तथा कुरु च ॥' इत्यादिना । सर्वव्यापित्वे
प्राप्तिरुक्ता श्वेताश्वतरे—'अतः परं ब्रह्म परं वृहन्तं यथानिकायं सर्वभूते
विश्वस्यैकं परिवेष्टितारमीशं तं ज्ञात्वामृता भवन्ति ॥' इति । ईश्वरस्यान्तःसं
वामनपुराणे—'ततोऽव्ययात्मा स हरिः स्वहृत्पङ्कजशायिनम् । दर्शयामास
मुरारिर्लिङ्गमीश्वरम् ॥' इति । अन्तर्मार्गेणं निःश्रेयसार्थमेवेति मुमुक्षुभि
ध्वन्यते । तथा चोक्तं ब्रह्माण्डपुराणे शैवे च—'स्वराडाख्यस्य देवस्य हृदय
ध्यमे । उमासहायो भगवान्नीलकण्ठस्त्रिलोचनः ॥ यो नृत्यत्यसौ नित्यं परम
द्मनः । तं दृष्ट्वा मनुजः सर्वो विमुक्तो भवतीति हि ॥' इत्यादिना । एतेन यः
पनिषत्सु एकत्वपुरुषत्वेश्वरत्वान्तःस्थत्वमोक्षहेतुत्वादिधर्मविशिष्टो गीयते स
सुखसंपत्संपादको भूयादित्याखण्डार्थः । 'प्राणोऽपानः समानश्चोदानव्यानै
यवः ।' इति त्रिकाण्डी । 'मुक्तिः कैवल्यनिर्वाणं श्रेयो निःश्रेयसामृतम्
सैव । इति ग्रन्थविस्तरभयादलमतिपल्लवितेन ॥ 'आशीर्नमस्क्रियारूपः
व्यार्थसूचकः । नान्दीति कथ्यते' इति मातृगुप्ताचार्योक्तम्, 'आशीर्यत्र न
च शशिनः संकीर्तनं वस्तुनो निर्देशः' इत्यादि नाट्यलोचनकारोदितम्,
तार्थतात्पर्यं तद्वस्तु सुधियां मतम् ।' इति नाटकस्य मुख्यार्थसूचका नान्दी
तरुकारकथितं च नान्दीलक्षणमनुसंधाय काव्यार्थसूचनमप्यत्रैवावग(म)

(नान्द्यन्ते)

[सूत्र]धारः—अलमतिविस्तरेण । (नेपथ्याभिमुखमवलोक्य) ...

...तस्तावत् ।

---

...ष्विति(ष्वन्ति)केषु प्रदेशविशे[षे]ष्विति यावत्। 'अन्तो नाशे मनोहरे ...तं मतं क्लीबं न स्त्री प्रान्तेऽन्तिके त्रिषु ॥' इति विश्वलोचनः । अन-...यप्रजापालनदयादाक्षिण्यादियोगाद्यं पुरुषमेकं मुख्यमाहुर्वर्णयन्ति । ... शेषः । रोदसी द्यावाभूमी व्याप्य स्थितम् । निजकीर्त्येति शेषः । य-...नीश्वरशब्दो यथार्थाक्षरो निग्रहानुग्रहादिप्रभुशक्तिसंपत्तेरिति भावः । ...र्थे । तथा च नियमितप्राणादिभिर्मुमुक्षुभिरपि समलोष्टाश्मकाञ्चनैरत्युदा-...रीत्यर्थः । यो राजा अन्तः अन्तःकरणे मृग्यते चिन्त्यते । नैतादृशो धर्म-...जगति दृष्टपूर्व इति सर्वदा चेतस्यनुसंधीयत(ते तस्य सुधिय) इति भावः । ...स्थिरतरः । अतिधीर इति यावत् । यद्वा स्थाणू रुद्ररूपः । तदंशत्वात् । ...क्तियासां प्रजानां ताभिर्योगेन चित्तानुसरणरूपेणोपायेन सुलभोऽभिग-...द्वा 'स्थाणुस्थिर—' इति निर्विसर्गान्तं पाठमङ्गीकृत्य स्थाणुवत्स्थिरः...ना-...यो भक्तियोगेन सुलभश्च । पश्चात्कर्मधारयः । यद्वा भुक्तिर्भोगः' इत्यमा-...यस्य स चासौ सुलभश्च । भागरूपेण वा योगेनोप... प्रेमात्रमित्य... । यद्वा ...रर्थाद्राजनि यस्या उर्वश्यास्तया योगेनार्थात्संगमनी... पत्रावली... संबन्धेन ...पः । तस्या वा योगेन पूर्वोक्तोपायेन सुलभः । एतेनास्यावशीकामुक-...रूपायाश्चास्याः संगमनीयद्वारा संगम इत्याद्यसूचि । '...योगश्चारे पूर्वलाभे ...वघातिनि । उपाये संगतौ ध्यानौषधसंनाहयुक्तिषु ॥' इति त्रिकाण्डी-... ...शेषणगणविशिष्टः स प्रसिद्धविभवो विशेषणमहिम्ना विशेष्यलाभा-...द्योतित... ...यकं सभासदां निःश्रेयसाय प्रायेण [योग]क्षेमादिरूपकल्याणायास्तु ...नटः । ... **नान्द्यन्त इति** । समनन्तरमेव वक्ष्यमाणलक्षणाया नान्द्या सूत्रधारः प्रविशतीत्यर्थः । क्वचित्पुस्तके 'सूत्रधारः' इत्य[स्या]न्ते द्वितीयो-...दृश्यते । स च सूत्रधारः प्रविशति वदति चेति क्रियाद्वयसूचनार्थः । सूत्रधारो ...सूत्रं सबीजकं नाट्यनुष्ठानं धारयति प्रवर्तयतीति सूत्रधारः । तदुक्तम्— ...स्य यदनुष्ठानं तत्सूत्रं स्यात्सबीजकम् । रङ्गदैवतपूजाकृत्सूत्रधार उदीरितः ।' ...] सागरोऽपि—'पूर्वरङ्गो भवेदेषामादौ देवार्चनाविधिः । तद्विधाता ... सूत्रधारश्च सूत्रभृत् ॥ अनुष्ठानं प्रयोगस्य सूत्रमाहुः सबीजकम् ॥' इति । ...आचार्या अप्याहुः— 'चतुरातोद्यनिष्णातोऽनेकभाषासमावृतः । नानाभाष-...ज्ञो नीतिशास्त्रार्थतत्त्ववित् ॥ वेषोपचारचतुरः पौरेषणविचक्षणः । नानागति-...ज्ञो रसभावविशारदः ॥ नाट्यप्रयोगनिपुणो नानाशिल्पकलान्वितः । छ-

क्षम् वेधानतत्त्वज्ञः सर्वशास्त्रविचक्षणः ॥ तत्तद्गीतानुगलयकलातारा(ला)ऽवा
[इतिधाय प्रयोक्ता च योक्तॄणामुपदेशकः ॥ एवं गुणगणोपेतः सूत्रधारो क
स–ध्य)ते ॥' इति । तत्र तावत्पूर्वरङ्गमारभ्यामुखपर्यन्तमयं क्रमः—'तत्रार
वरङ्गः सभापूजा ततः परम् । कथनं कविसंज्ञादेर्नाटकस्याप्यथामुखम् ॥' इतिह्ण
प्राटके । यद्यपि—'सभापतिः सभासंस्था गायका वादका अपि । नटं
मोदन्ते यत्रान्योन्यं तु रञ्जनात् ॥ अतो रङ्ग इति ज्ञेयः पूर्वं यत्संप्र
त्तस्मादयं पूर्वरङ्ग इति विद्वद्भिरुच्यते ॥' इति भावप्रकाशोक्तलक्षणा
रज्यते जनोऽस्मिन्निति पूर्वरङ्ग इति व्युत्पत्तेश्च, पूर्वरङ्गो नाट्यशालोच्यते
[ता]त्स्थ्याद्युपचारहेतोरधिष्ठानलक्षणया पूर्वरङ्गशब्देन व्युत्थापनाद्युच्यते।
साहित्यदर्पणे—'यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये । कुशीलवाः प्र
पूर्वरङ्गः स उच्यते ॥' किंच दशरूपके—'पूर्वरङ्गं विधायैव सूत्रधारे वि
प्रविश्य तद्वदपरः काव्यमास्थापयेन्नटः ॥' अन्यत्रापि—'प्रयुज्य
निष्क्रामेत्सूत्रधारः सहानुगः । स्थापकः प्रविशेत्पश्चात्सूत्रधारगुणाकृतिः ।
तिरीश्वरोऽपि—'आरम्भं भरतः कृत्वा सालंकारः शुभाकृतिः । सूत्रध
न्नान्दीं मध्यमं स्वरमाश्रितः ॥' इति । संगीतकल्पतरुकारोऽपि—'र
पठेन्नान्दीं ... रङ्गभूमिगः । मङ्गलं सूचयित्वा तु ललितेन शुभान्वि
इति । कृष्णपिङ्गलसूत्रधाराख्यो भरतो नट एव दिक्पालस्तुतिजर्जर
न्यन्तं ... प्रपञ्च्य निष्क्रान्तिं विदधीत । तस्मिंश्च विनिर्गते रङ्गभूमावाग
समालंकारगुणोऽन्यः स्थापकाभिधो नटो वैष्णवस्थानकादिना सूत्रधार
काव्यमास्थापरे... सूचयेत् । अत एव वक्ष्यमाणेन 'नटी विदूषको वा'
त्रधारलक्षणे स्वसमवेषस्थापकाख्यनटेन सूत्रधारेण च संलाप इति संग
केचिदाहुः । अपरे तु—'दिक्पालस्तुतिजर्जरपूजान्तमेव पूर्वरङ्गं न
कृत्वा सू धारे विनिर्गते तत्समगुणत्वात्स्थापक एव सूत्रधारो ना
पठित्वा रङ्गभूमावागत्य काव्यमास्थापयेत् ।' इत्याहुः । 'इदा... पूर्वरङ्गस्य
क्प्रयोग... वादेक एव सूत्रधारः सर्वं प्रयोजयति ।' इति साहित्यदर्पणक
शक्रध्वजस्य च जर्जर इति पूर्वाचार्यकृता संज्ञा । तथा च—'प्रत्याहा
दिकान्यङ्गान्यस्य भूयांसि यद्यपि । तथाप्यवश्यं कर्तव्या नान्दी विघ्नोपशान्त
इति । अस्येति पूर्वरङ्गस्य । अतश्चास्या आवश्यकत्वेनोक्तत्वात्प्रत्याहारा
विंशदङ्गेषु केवलं नाट्ये च सर्वनाटकेषु बहुधा विधीयते । तल्लक्षणं तु दे
णिविरचितदशरूपकटीकायाम्—'देवद्विजनृपादीनामाशीर्वचनपूर्विका । नन्द
स्यां सुरा यस्मात्तस्मान्नान्दीति कीर्तिता ॥' तथा नाट्यलोचनकारोऽप्याह
'आशीर्यत्र नमस्क्रिया च शशिनः संकीर्तनं वस्तुनो निर्देशो गुरुसंस्तुतिर्मधु
मोदाय पु ञ्जलिः । श्रव्यैर्द्वादशभिः पदैरथ समैर्यद्वाष्टभिर्निर्मिता सद्वृत्तेन

ग्थिता नान्दीति सर्वागमे ॥' मातृगुप्ताचार्या अप्याहुः—'आशी-
पः श्लोकः काव्यार्थसूचकः । नान्दीति कथ्यते' इति । साहित्यदर्प-
ाशीर्वचनसंयुक्ता नित्यं यस्मात्प्रयुज्यते । देवद्विजनृपादीनां तस्मान्ना-
ा ॥ मङ्गल्यशङ्खचक्राब्जकोककैरवशंसिनी । पदैर्युता द्वादशभिरष्टा-
त् ॥' इति । इयं चाष्टपदा द्वादशपदा समपदा वा विधेया । तदु-
धारः पठेत्तत्र मध्यमं स्वरमाश्रितः । नान्दीं पदैर्द्वादशभिरष्टाभिर्वा
पदैरथ समैः' इति चेत्यादि । पदनियमोऽप्यस्यामुक्तो यथा—'श्लो-
केचित्] सुप्तिङन्तमथापरे । परेऽवान्तरवाक्यं [च] पदमाहु-
यत्त्वत्र साहित्यदर्पणकृदाह—'कालिदासादिमहा[कवि]प्रबन्धेषु
आदौ नान्दीलक्षणायोगात्पूर्वरङ्गस्यैव रङ्गद्वाराख्यमङ्गमारभ्य कविः
ाच्च रङ्गद्वारमेवेदं न नान्दी' इति, तन्मूलादर्शननिबन्धनम् । यतः
काव्यङ्गान्यस्य भूयांसि यद्यपि' इत्यादिपूर्वोदाहृतवचनेनास्या अव-
ात् 'श्रव्यैर्द्वादशभिः पदैरथ समैर्यद्वाष्टभिर्निर्मिता' इत्यादिसमनन्तरोदा-
चनकारोक्तनान्दीलक्षणेऽस्याः समपदत्वेनाप्युक्तेरत्र च श्लोकपाद-
ऽवान्तरवाक्यपदाभिधाने च चतुष्पदात्वेन त[त्]पदमते स्थि
विशेषणान्तपदविधानतः षड्विंशतिपदात्वेन चातिस्पष्टतया न
ीलक्षणायोगाभिधानं गजनिमीलिकया मौखर्यमात्रमित्यलं
च समासोक्त्या पूर्वोक्तप्रकारेण काव्यार्थप्रकाशनात्पत्रावली
थ चोक्तं नाट्यदर्पणकृता—'यस्यां बीजस्य विन्यासो ह्यभिधे-
। श्लेषेण वा समासोक्त्या नाम्ना पत्रावली तु सा ॥' इति । 'यत्र
ादौ स्यातां मूलप्रसारितौ । वैष्णवं तत्तु निर्दिष्टं स्थानकं विष्णुदेवत-
योतिरीशवचनोक्तवैष्णवस्थानकेन प्रथमप्रविष्टसूत्रधारसमः स्था
नटः । 'दिव्यमर्त्ये स तद्रूपो मिश्रमन्यतरस्तयोः । सूचयेद्वस्तु बीजं
मथापि वा ॥' इत्यपि(भि)धानात् । 'रङ्गं प्रसाद्य मधुरैः श्लोकैः का-
। ऋतुं कंचिदुपादाय भारतीं वृत्तिमाश्रयेत् ॥ भारती संस्कृतप्रायो
नटाश्रयः । पदैः प्ररोचनायुक्तैर्वीथीप्रहसनामुखैः ॥' इत्युक्तलक्षणवा-
भारतीरूपाम् 'अरमि(लम)तिविस्तरेण' इत्यारभ्य 'प्रस्तावना'
ावनामवतारयति—**अलमित्यादिना** । अतिविस्तरेण पूर्वरङ्गाङ्गप्र-
तामित्यर्थः । प्रत्याहा[रा]दिनिखिलपूर्वरङ्गाङ्गकरणे हि कथार-
ां जनानां जामि(ड्य)ता स्यात्, अतस्तिष्ठत्वयमेतत्प्रपञ्च इति
**थ्याभिमुखमिति** । नेपथ्यं जवनिकान्तर्भूमिर्वेषपरिग्रहस्थलम् ।
ामाहुर्नेपथ्यम्' इति सागरोक्तेः । केचित्तु—'रङ्गभूमौ तु नेपथ्यं
' इति विश्वलोचनोक्त्यनुसंधानेन नेपथ्यं रङ्गभूमिमाहुः । अपरे

(प्रविश्य ।)

**पारिपार्श्वकः**— भाव, अयमस्मि ।

**सूत्रधारः**— मारिष, परिषदेषा पूर्वेषां कवीनां दृष्टरसप्रब-
। । अहमस्यां कालिदासग्रथितवस्तुना नवेन त्रोटकेन स्थास्
च्यतां पात्रवर्गः स्वेषु स्वेषु पाठेष्ववहितैर्भवितव्यमिति

**पारिपार्श्वकः**—यथाज्ञापयति भावः । (इति कान्तः ।)

**सूत्रधारः**— यावदिदानीमार्यविदग्धमिश्रान्विज्ञ विज्ञापयामि ।

(प्रणिपत्य ।)

प्रणयिषु वा दाक्षिण्यादथवा सद्वस्तुपुरुषबहुमान ।
शृणुत जना अवधानात्क्रियामिमां कालिदासस्य , २ ॥

---

नान्दीं

पठेन्नान्तः—'नेपथ्यं स्याज्जवनिका' इति कोषमुपन्यस्य नेपथ्यं जवनिवमेवाहुः । इति **मारिषेति** । मारिषः स्थापकाख्यसूत्रधारकल्पः पारिपार्श्वाभि । लक्षणं चाभाणीद्भरतः—'सूत्रधारस्य पार्श्वे यः प्रवदन्कुरुतेऽर्थना र्थसूचना लापं स भवेत्पारिपार्श्वकः ॥' इति । उक्तं चान्यत्र—'म भा उद्दिष्टः किंचिदूनस्तु मारिषः ।' इति ॥ कालिदासेन तदाख्यकविना ग्रथितं व तत्त्वृत्तं यत्र । त्रोटकेन तन्नामकेनोपरूपकेण । तल्लक्षणं च साहित्यदर्पणे—'सप्ताष्टनवपञ्चाङ्कं दिव्यमानुषसंश्रयम् । त्रोटकं नाम तत्प्राहुः प्रत्यङ्कं सविदूषकम् ॥' इति । प्रत्यङ्कं सविदूषकत्वादत्र शृङ्गारोऽङ्गी । 'प्रत्यङ्कं सविदूषकम्' इति तु प्रायिकाभिप्रायम् । शृङ्गाराङ्गित्वमात्रमिह विवक्षितम् । तेन कस्मिंश्चिदङ्के सविदूषकत्वव्यभिचारेऽपि न क्षतिः । अन्यत्सर्वं नाटकवत् । 'विना विशेषं सर्वेषां लक्ष्म) नाटकवन्मतम् ।' इति तत्रैवोक्तेरिति । पात्रवर्गो नर्तकसमुदायः । अवहितैः सावधानैः ॥ आर्या अभ्यर्हिताः, विदग्धाश्चतुःषष्टिकलावेदिनः, तन्मिश्रान्संवलितान् । सभ्यानित्यर्थः । यद्वा आयाता दूरं गता भ्रान्तत्वादिदोषेभ्य इत्यार्याः । यद्वा र्याः सत्कुलादिसंपन्नाः । यदाह भरतः—'कुलं शीलं दया दानं धर्मः सत्यं ज्ञता । अद्रोह इति येष्वेतत्तानार्यान्संप्रचक्षते ॥' कार्यरसवत्सलमनसो विदग्धा मिश्राः पूज्या वा । पूज्ये मिश्रवचनं नित्यबहुवचनान्तम् । 'मरीचिमिश्रैर्दक्षेण' इति विष्णुपुराणात्, लोकेऽपि व्यवहारदर्शनाच्च । **प्रणयिष्विति** । प्रणयिषु प्रीतिस्तद्वत्सु । दाक्षिण्यमानुकूल्यम् । सद्वस्तु सदितिवृत्तम्, पुरुषो वर्णनीयो नेता कः, तयोरादरातिशयात् । समीचीनं वृत्तं यस्यैतादृशः पुरुषो वा । क्रियां म् ॥ २ ॥

(नेपथ्ये ।)

अँज्जा, परित्ताअध परित्ताअध । जो सुरपक्खवादी, जस्स वा अम्बरअले गई अत्थि ।

**सूत्रधारः**—(कर्णं दत्वा ।) अये, किं नु खलु मद्विज्ञापनानन्तरमार्तानां कुररीणामिवाकाशे शब्दः श्रूयते ।

मत्तानां कुसुमरसेन षट्पदानां
शब्दोऽयं परभृतनाद एष धीरः ।
आकाशे सुरगणसेविते समन्ता-
त्किं नार्यः कलमधुराक्षरं प्रगीताः ॥ ३ ॥

१. आर्याः, परित्रायध्वं परित्रायध्वम् । यः सुरपक्षपाती, यस्य वाम्बरतले गतिरस्ति ।

---

**नेपथ्ये** । **अज्जा इति** । आर्याः, परित्रायध्वं [परित्रायध्वम् ।] यः सुरपक्षपाती यस्य वाम्बरतले गतिरति(स्ति) । अत्र क्वचित्क्वचिद्गाथादिषु लिङ्गवचनपदविपर्यासाः 'प्राकृते लिङ्गवचनमतन्त्रं पूर्वनिपातानियमश्च' इत्युक्तत्वाज्ज्ञेयाः । अत्रेदमवधेयम् । इतिवृत्तं हि वस्त्वित्युच्यते । तच्च—'सूच्यमेव भवेत्किंचिद्दृश्यं श्रव्यमथापरम् ।' इतीतिवृत्तस्य द्वैविध्यमुपन्यस्य 'अर्थोपक्षेपकैः सूच्यं पञ्चभिः प्रतिपादयेत् । विष्कम्भचूलिकाङ्कास्याङ्कावतारप्रवेशकैः ॥' इत्यादि प्रतिपादितम् । प्रकृते तु—'नेपथ्ये' इत्यादिना यत्र यत्र यत्प्रस्तूयते सा चूलिका । 'अन्तर्जवनिकासंस्थैश्चूलिकार्थस्य सूचनम् ।' इति लक्षणात् । यथात्रैव तावत् 'नेपथ्ये' इत्यारभ्य 'अम्बरअले गई अत्थि' इत्यन्तेन कुबेरभवना-[दा]गच्छन्त्याश्चित्रलेखाद्वितीयाया उर्वश्या दानवापहरणसूचनमिति ॥ **मत्तानामिति** । किमिति वितर्के । स च सर्वत्र षट्पदादिशब्दादिष्वन्वेति । कलान्यव्यक्तानि मधुराणि चाक्षराणि यस्यां क्रियायामिति यथा तथा । यद्यपि कलशब्दोऽव्यक्तमधुरवाचकः, तथापि मधुरपदस्य वर्तमानत्वात्केवलाव्यक्तपरो ग्राह्यः । यद्वा कं चित्रं लान्तीति कलानि आश्चर्यकारीणि मधुराणि अक्षराणि यत्र यस्यां क्रियायाम् । यद्वा कं द्युतिं लान्ति तानि । अनुप्रासादिघटनाच्छोभमानानीति यावत् । यद्वा कं शुद्धार्थं लान्ति तानि । प्रसिद्धार्थपदयुक्तानीति यावत् । तेन च 'प्रसिद्धार्थपदत्वं यत्स प्रसादो निगद्यते' इति लक्षणोक्तप्रसादाख्यगुणव[त्ता]ध्व-

(विचिन्त्य ।) भवतु । ज्ञातम् ।

ऊरूद्भवा नरसखस्य मुनेः सुरस्त्री
कैलासनाथमनुसृत्य निवर्तमाना ।
बन्दीकृता विबुधशत्रुभिरर्धमार्गे
क्रन्दत्यतः करुणमप्सरसां गणोऽयम् ॥ ४ ॥

(इति निष्क्रान्तः ।)

## प्रस्तावना ।

---

निता । यद्वा कं स्मरं लान्ति तानि । यच्छ्रवणमात्रेण झटिति मदनोद्भवो भवतीति भावः । यद्वा कं मयूरं लान्ति वशीकुर्वन्ति तद्विधानि । यदावर्ण(कर्णने)न तिर्यञ्चोऽपि हर्षकलिता वशीभवन्ति, किमुतान्ये सचेतस इति हृदयम् । 'को ब्रह्मानिलसूर्याग्निचित्रारियमकेतुषु । विष्णुवाहनशर्वेऽब्धौ सितकर्णे वसौ द्युतौ ॥ स्वर्गे चक्रे तथा मित्रे शुद्धेऽर्थे स्मरकालयोः ॥' इत्येकाक्षरः । 'को ब्रह्मानिलसूर्याग्नियमात्मद्योतबर्हिषु ।' इति विश्वलोचनः । प्रगीता गातुमुपक्रान्ताः । प्रगीता इत्यादि(त्यत्र) कर्मणि क्तः । 'किंनर्यः' इत्यपि क्वचित्पाठे किंनरवनिता इत्यर्थः । परं त्वनुपादेयोऽयं पाठः । वितर्कार्थककिपदस्यात्रातीवावश्यकत्वात् । त्रिगताभिधं चेदं वीथ्यङ्गम् । तल्लक्षणं दशरूपके—'श्रुतिसाम्यादनेकार्थयोजनं त्रिगतं मतम् ।' इति । अत्राकाशे श्रुतः शब्दः श्रुतिसाम्यतः स्वरावयवीभूतसूक्ष्मशब्दसाम्यतः षट्पदादीनां किमित्यादिभिरनेकार्थैर्योजितः । 'प्रथमश्रवणाच्छब्दः श्रूयते ह्रस्वमात्रकः । सा श्रुतिः संपरिज्ञेया स्वरावयवलक्षणा ॥' इति संगीते ॥ ३ ॥ **ऊरूद्भवेति** । नरस्य नरावतारस्यार्जुनस्य सखा मुनिर्नारायणस्तस्य ऊरूद्भवा सक्थ्यवयवोत्पन्ना । 'सक्थि क्लीबे पुमानूरुः' इत्यमरः । सुरस्त्री उर्वशीसमाख्याप्सरोरूपा । कैलासनाथो महादेवस्तमनुसृत्य सेवित्वा । कैलासनाथमनुसृत्येत्यत्र 'कर्मप्रवचनीययुक्ते द्वितीया' इति द्वितीया । 'कैलासनाथमुपनृत्य' इति पाठे तत्समीपे नृत्यं कृत्वेत्यर्थः । 'विवक्षातः कारकविभक्तयो नाना भवन्ति' इति शाब्दिकोक्तिमनुसंधायाधिकरणविवक्षायां कर्मत्वम् । बन्दीकृता हठगृहीता । विबुधशत्रवो दैत्याः । मार्गस्यार्धमर्धमार्गो मार्गान्तरालम् । क्रन्दति रोदिति । उर्वशी किल नारायणोरुसंभूतेति पुराणम् ॥ **प्रस्तावनेति** । तल्लक्षणं भावप्रकाशे—'नटी विदूषको वापि पारिपार्श्वक एव वा । सूत्रधारेण सहिताः संलापं यत्र कुर्वते ॥ चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः । आमुखं तत्तु विज्ञेयं बुधैः प्रस्तावनापि सा ॥' दशरूपकेऽपि—'सूत्रधारो नटीं ब्रूते मार्षं वाथ विदूषकम् । स्वकार्यं प्रस्तुताक्षेपिचि-

(ततः प्रविशन्त्यप्सरसः ।)

**अप्सरसः**— अज्जा[1], परित्ताअध परित्ताअध । जो सुरपक्खवादी, जस्स वा अम्बरअले गई अत्थि ।

(ततः प्रविशत्यपटीक्षेपेण राजा रथेन सूतश्च ।)

**राजा**— अलमाक्रन्दितेन । सूर्योपस्थाननिवृत्तं पुरूरवसं मामेत्य कथ्यतां कुतो भवत्यः परित्रातव्या इति ।

**रम्भा**— असुरावलेपादो[2] ।

१. आर्याः, परित्रायध्वं परित्रायध्वम् । यः सुरपक्षपाती, यस्य वाम्बरतले गतिरस्ति ।

२. असुरावलेपात् ।

---

त्रोक्त्या यत्तदामुखम् ॥' इयं च प्रस्तावना आमुखपराख्या भारत्यङ्गमेवेति । अत्र च—'उद्धात्यकः कथोद्धातः प्रयोगातिशयस्तथा । प्रवर्तकावलगिते पञ्च प्रस्तावनाभिदाः॥' इत्युक्तप्रस्तावनापञ्चाङ्गेषु—'यदि प्रयोग एकस्मिन्प्रयोगोऽन्यः प्रयुज्यते । तेन पात्रप्रवेशश्चेत्प्रयोगातिशयस्तदा ॥' इति लक्षणोक्तप्रकारेणेह 'नेपथ्ये । अज्जा, परित्ताअध' इत्यारभ्य 'क्रन्दत्यतः करुणमप्सरसां गणोऽयम्' इत्यन्तेनाप्सरसां प्रवेशं सूचयित्वा निष्क्रान्तेन सूत्रधारेण स्वप्रयोगमतिशयान एव प्रयोगः प्रयोजित इति ॥ **[ततः प्रविशन्तीति ।)** ततः प्रविशन्तीत्यनेन प्रस्तावनान्तसूचितानामप्सरसां प्रवेशः । **अप्सरसः** । आर्याः, परित्रायध्वं परित्रायध्वम् । योऽमर(यः सुर)पक्षपाती, यस्य वाम्बरतले गतिरस्तीति । कुत्रचित् 'ततः प्रविशन्त्यपटीक्षेपेण' इति पाठः । स नाटकग्रन्थादर्शननिबन्धनः । यतः—'नासूचितस्य पात्रस्य [प्रवेशो] नाटके मतः ।' इति नाटकसमयप्रसिद्धेर्यत्रासूचितपात्रप्रवेशस्तत्राकस्मिकप्रवेशेऽपटीक्षेपेणेति वचनं युक्तम् । अत्र तु प्रस्तावनान्ते सूचितानामेवाप्सरसां प्रवेश इति । केचित्पुनः—न पटीक्षेपोऽपटीक्षेप इति विग्रहं विधाय पटीक्षेपं विनैव प्रविशन्तीति समर्थयन्ते । तदप्यापाद्यकुचोद्यमात्रमित्यास्तां तावत् । पुरूरवसः प्रवेशे त्वपटीक्षेपो युक्तोऽसूचितत्वात् । अपटी जवनिका तस्याः क्षेपणाय(पेण) सारणेन । 'अपटी काण्डपटः स्यात्प्रतिसीरा जवनिका ति[र]स्करिणी ।' इति हलायुधः । **राजा** । मामेत्य मां प्राप्य । 'समेत्य' इति पाठे मिलित्वा ॥ **रम्भा** । असुरावलेपात् । अवलेपो गर्वः । 'अवलेपस्तु दोषे स्याद्गर्वे लेपे च संगमे ।' इति विश्वलोचनः । 'अवलेपादो' इत्यत्र 'आदो दुहय—' इति पञ्चम्यामादो

**राजा**— किं पुनरसुरावलेपेन भवतीनामपराद्धम् ।

**रम्भा**— [1]सुणादु महाराओ । जा तवोविसेससङ्किदस्स सुउमारं पहरणं महेन्दस्स, पच्चादेसो रूवगव्विदाए सिरिगोरिए, अलंकारो सग्गस्स, सा णो पिअसही उव्वसी कुबेरभवणादो णिअत्तमाणा केणावि दाणवेण चित्तलेहादुदीआ अद्धपथं ज्जेव्व बन्दिग्गाहं गिहीदा ।

**राजा**— अपि ज्ञायते कतमेन दिग्विभागेन गतः स जाल्मः।

**अप्सरसः**— [2]ईसाणीए दिसाए ।

**राजा**— तेन हि मुच्यतां विषादः । यतिष्ये वः सखीप्रत्यानयनाय ।

**अप्सरसः**—[3]सरिसं एदं सोमवंससंभवस्स ।

**राजा**— क्व पुनर्मां भवत्यः प्रतिपालयिष्यन्ति ।

१. शृणोतु महाराजः । या तपोविशेषशङ्कितस्य सुकुमारं प्रहरणं महेन्द्रस्य, प्रत्यादेशो रूपगर्वितायाः श्रीगौर्याः, अलंकारः सर्गस्य, सा नः प्रियसख्युर्वशी कुबेरभवनान्निवर्तमाना केनापि दानवेन चित्रलेखाद्वितीया अर्धपथ एव बन्दिग्राहं गृहीता ।

२. ऐशान्या दिशा ।

३. सदृशमेतत्सोमवंशसंभवस्य ।

इत्यादेशः ॥ **रम्भा** । शृणोतु महाराजः । या तपोविशेषशङ्कितस्य सुकुमारं प्रहरणं महेन्द्रस्य, प्रत्यादेशो रूपगर्वितायाः श्रीगौर्याः, अलंकारः सर्गस्य, सा नः प्रियसखी उर्वशी कुबेरभवनान्निवर्तमाना केनापि दानवेन चित्रलेखाद्वितीया अर्धपथ एव बन्दिग्राहं गृहीता । 'परिवर्तमाना सहसा' इति, 'हिरण्यपुरवासिना केशिना दानवाधिपेन' इत्य[पि] क्वचित्पाठः । प्रहरणमायुधम् । 'आयुधं तु प्रहरणं शस्त्रमस्त्रम्' इति त्रिकाण्डी । 'प्रत्यादेशो निराकृतिः' इति च सा । सर्गस्य संसारस्य । चित्रलेखानामाप्सरा उर्वशीसखी । बन्दीव गृहीत्वा बन्दिग्राहम् । हिरण्यपुराख्यं नगरम् ॥ 'जाल्मोऽसमीक्ष्यकारी' [इति] त्रिकाण्डी ॥ **अप्सरसः** । ऐशान्या दिशा । 'पूर्वोत्तरेण' इत्यपि पाठः । पूर्वोत्तरयोरन्तरालेनेत्यर्थः ॥ **अप्सरसः** । सदृशमेतत्सोमवंशसंभवस्य । प्रतिपालनं प्रतीक्षा ॥ **अप्सरसः** । ए-

**अप्सरसः**— एदस्सिं हेमकूडसिहरे ।[1]

**राजा**— सूत, ऐशानीं दिशं प्रति चोदयाश्वानाशुगमनाय ।

**सूतः**— यदाज्ञापयत्यायुष्मान् । (इति यथोक्तं करोति ।)

**राजा**— (रथवेगं रूपयित्वा ।) साधु साधु । अनेन रथवेगेन पूर्वप्रस्थितं वैनतेयमप्यासादयेयम्, किं पुनस्तमपकारिणं मघोनः । मम

अग्रे यान्ति रथस्य रेणुपदवीं चूर्णीभवन्तो घना-
श्चक्रभ्रान्तिररान्तरेषु वितनोत्यन्यामिवारावलीम् ।
चित्रारम्भविनिश्चलं हरिशिरस्यायामवच्चामरं
यन्मध्ये समवस्थितो ध्वजपटः प्रान्ते च वेगानिलात् ॥ ५ ॥

(निष्क्रान्तो रथेन राजा सूतश्च ।)

**सहजन्या**— हला, गदो राएसी । ता अम्हे वि जधासंदिट्ठं पदेसं गच्छम्ह ।[2]

१. एतस्मिन्हेमकूटशिखरे ।

२. हला, गतो राजर्षिः । तद्वयमपि यथासंदिष्टं प्रदेशं गच्छामः ।

---

तस्मिन्हेमकूटशिखरे ॥ वैनतेयं गरुडम् । 'वैनतेयः खगेश्वरः' इति त्रिकाण्डी । रथवेगमेवाह—**अग्रे यान्तीति**। ममेति चूर्णकस्थितं रथस्येत्यत्र योज्यम् । 'मम' इत्यत्र 'तथा हि' इत्यपि पाठः । चूर्णीभवन्तो घना मम रथस्याग्रे रेणुपदवीं रेणुमार्गं यान्त्यनुसरन्ति । जलगुरवोऽपि जलदाश्चक्रधारया पिष्टीकृता मत्स्यन्दनाग्रतः पांसुवदुत्सर्पन्तीत्यर्थः । यद्वा रथस्याग्रेऽश्वखुरैश्चूर्णीभवन्तो मेघा रेणुपदवीं यान्ति । रेणवो यथाश्वोद्धूताः पाश्चात्यवातेनाग्रे नीयमाना अपि रथस्य वेगातिशयेन पश्चाद्भवन्ति, तथैतेऽपि रथरयात्पश्चाद्गच्छन्तीति भावः । 'रेणुवदमी' इत्यपि क्वचित्पाठः । अरान्तरेषु चक्रावयवीभूतमध्यकाष्ठान्तरालेष्वन्यामरावलीं तनोतीव । 'अरः शीघ्रे च चक्राङ्गे' इति विश्वः । रयातिशयाद्धि तादृशं भास[त] इति भावः । हरिशिरस्यश्वमस्तके भूषणार्थं बद्धमायामवद्दीर्घं चामरं चित्रे आरम्भो न्यासो यस्य तद्वन्निश्चलम् । जातमिति शेषः । 'चित्रन्यस्तमिवाचलम्' इत्यपि पाठः । अतिवेगेन निश्चलताश्वपुच्छादीनां प्रत्यक्षदृश्यैव । चः [पूर्व]समुच्चये । प्रान्ते । विद्यमान इति शेषः । साहजिकवातेनेत्यर्थात् । ध्वजपटो वेगानिलाद्यन्मध्ये रथमध्यभागे समवस्थितः । अथवा प्रान्ते यन् गच्छन् । आद्यन्तचरणाभ्यां वातादपि रथस्यातिवेगवत्तरत्वं द्योतितम् ॥ ५ ॥ **सहजन्या** । हलेति

**मेनका**— [१]सहि, एव्वं करेम्ह ।

(इति हेमकूटशिखरे नाट्येनाधिरोहन्ति ।)

**रम्भा**— [२]अवि णाम सो राएसी उद्धरदि णो हिअअसल्लम् ।

**मेनका**— [३]सहि, मा दे संसओ भोदु ।

**रम्भा**— [४]णं दुज्जआ दाणवा ।

**मेनका**— [५]उवट्ठिदसंपराओ महिन्दो वि मज्झमलोआदो सबहुमाणं आणाविअ तं एव्व विबुधविजआअ सेणामुहे णिओजेदि ।

**रम्भा**— [६]सव्वहा विअई भोदु ।

**मेनका**— (क्षणमात्रं स्थित्वा ।) [७]हला, समस्ससध समस्ससध ।

१. सखि, एवं कुर्मः ।

२. अपि नाम स राजर्षिरुद्धरति नो हृदयशल्यम् ।

३. सखि, मा ते संशयो भवतु ।

४. ननु दुर्जया दानवाः ।

५. उपस्थितसंपरायो महेन्द्रोऽपि मध्यमलोकात्सबहुमानमानाय्य तमेव विबुधविजयाय सेनामुखे नियुङ्क्ते ।

६. सर्वथा विजयी भवतु ।

७. सख्यः, समाश्वसित समाश्वसित । एष उल्लसितहरिणकेतनस्तस्य

सखीसंबुद्धिः । गतो राजर्षिः । 'हण्डे हञ्जे हलाह्वाने नीचां चेटीं सखीं प्रति ।' इति त्रिकाण्डी । सागरोऽपि—'महादेवी परीवारसमाह्वाने समुत्सुका । हञ्जे चेटीं प्रति प्राह सौम्ये [च] प्रियकारिणि ॥' इति । तद्वयमपि यथासंदिष्टं प्रदेशं गच्छामः ॥ **मेनका** । सखि, एवं कुर्मः ॥ **रम्भा** । अपि नाम स राजर्षिरुद्धरति नो हृदयशल्यम् । अपि नामेति संभावनायाम् ॥ **मेनका** । सखि, मा ते संशयो भवतु ॥ **रम्भा** । ननु दुर्जया दानवाः । नूनं नन्विति वा ॥ **मेनका** । उपस्थितसंपरायो महेन्द्रोऽपि मध्यमलोकात्सबहुमानमानाय्य तमेव विबुधविजयाय सेनामुखे नियुङ्क्ते । संपरायो युद्धम् । 'संप्रहारः' इति वा पाठः । 'संस्फोटः संपरायश्च संस्फेटः कलहेऽस्त्रियाम्' इति रूपचिन्तामणिः । 'संप्रहाराभिसंपातकलिसंस्फोटसंयुगाः ।' इति त्रिकाण्डी । मध्यमलोको मर्त्यः । 'पुंसि स्मृतौ मध्यमलोकमर्त्यौ' इति त्रिकाण्डीशेषः ॥ **रम्भा** । सर्वथा विजयी भवतु ॥ **मेनका** । सख्यः, समाश्वस(सि)त समाश्वसित । एष उल्लसितहरिणकेतनस्तस्य राजर्षेः सोमदत्तो रथो

एस उल्लसिदहरिणकेदणो तस्स राएसिणो सोमदत्तो रहो दीसदि । ण एसो अकिदत्थो पडिणिउत्तिस्सदि त्ति तक्केमि ।

(निमित्तं सूचयित्वावलोकयन्त्यः स्थिताः ।)

(ततः प्रविशति रथारूढो राजा सूतश्च । भयनिमीलिताक्षी चित्रलेखादक्षिणहस्तावलम्बिता उर्वशी च ।)

**चित्रलेखा**— सहि[1], समस्सस समस्सस ।

**राजा**— सुन्दरि, समाश्वसिहि समाश्वसिहि ।

गतं भयं भीरु सुरारिसंभवं
त्रिलोकरक्षी महिमा हि वज्रिणः ।
तदेतदुन्मीलय चक्षुरायतं
निशावसाने नलिनीव पङ्कजम् ॥ ६ ॥

**चित्रलेखा**— अम्महे[2], कहं उस्ससिदमेत्तसंभाविदजीविदा अज्ज वि एसा सण्णं ण पडिवज्जदि ।

**राजा**— बलवदत्र ते सखी परित्रस्ता । तथाहि ।

मन्दारकुसुमदाम्ना गुरुरस्याः सूच्यते हृदयकम्पः ।
मुहुरुच्छ्वसता मध्ये परिणाहवतोः पयोधरयोः ॥ ७ ॥

राजर्षेः सोमदत्तो रथो दृश्यते । नैषोऽकृतार्थः प्रतिनिवर्तिष्यत इति तर्कयामि ।

१. सखि, समाश्वसिहि समाश्वसिहि ।

२. अहो, कथमुच्छ्वसितमात्रसंभावितजीविता अद्याप्येषा संज्ञां न प्रतिपद्यते ।

---

दृश्यते । नैषोऽकृतार्थः प्रतिनिवर्तिष्यत इति तर्कयामि । हरिणकेतनो हरिणः केतने ध्वजे यस्य सः । सोमेन चन्द्रेण दत्तः । चन्द्रीयत्वादेव च हरिणध्वजत्वमपि युक्तम् ॥ **चित्रलेखा** । सखि, समाश्वसिहि समाश्वसिहि ॥ **गतमिति** । सुरारिसंभवभयगमने हेतुमाह—हि यतो वज्रिण इन्द्रस्य महिमा त्रिलोकरक्षी । वर्तत इति शेषः । अन्यथास्य त्रिलोकरक्षित्वमे[व] व्याहन्येतेति भावः ॥ ६ ॥ **चित्रलेखा** । अम्महे इत्याश्चर्ये । कथमुच्छ्वसितमात्रसंभावि [तजीवि]ता अद्याप्येषा संज्ञां न प्रतिपद्यते चेतनां न प्राप्नोति ॥ बलवदतिशयेन । **मन्दा-**

**चित्रलेखा**—(सकरुणम् ।) हला उव्वसि, पज्जवत्थावेहि अत्ताणम् । अणच्छरा विअ पडिभासि ।[1]

**राजा**—

मुञ्चति न तावदस्या भयकम्पः कुसुमकोमलं हृदयम् ।
सिचयान्तेन कथंचित्स्तनमध्योच्छ्वासिना कथितः ॥ ८ ॥

(उर्वशी प्रत्यागच्छति ।)

**राजा**— (सहर्षम् ।) चित्रलेखे, दिष्ट्या वर्धसे । प्रकृतिमापन्ना ते प्रियसखी । पश्य ।

आविर्भूते शशिनि तमसा रिच्यमानेव रात्रि-
नैशस्यार्चिर्हुतभुज इव च्छिन्नभूयिष्ठधूमा ।
मोहेनान्तर्वरतनुरियं लक्ष्यते मुच्यमाना
गङ्गा रोधःपतनकलुषा गच्छतीव प्रसादम् ॥ ९ ॥

१. सखि उर्वशि, पर्यवस्थापयात्मानम् । अनप्सरेव प्रतिभासि ।

रेति । मन्दाराख्यकल्पवृक्षपुष्पमालया । 'परिणाहो विशालता' इत्यमरः ॥ ७ ॥ **चित्रलेखा** । सखि उर्वशि, पर्यवस्थापयात्मानम् । अनप्सरेव प्रतिभासि । पर्यवस्थापय स्थिरीकुरु । धैर्यं धारयेति भावः । अनप्सरेवेति । अधैर्यं हि मनुष्याणामुचितम्, न दैवतानामिति भावः । 'आपः सुमनसो वर्षा अप्सरसः (?) सिकताः समाः । एते स्त्रियां बहुत्वे स्युरेकत्वेऽप्युत्तरत्रिकम् ॥' इति ॥ **मुञ्चतीति** । सिचयं(यः) वस्त्रम् । 'वस्त्रं सिचयः पटः पोतः' इति हलायुधः ॥ ८ ॥ **दिष्ट्या वर्धस इति** । उत्सवान(ववत्य)सीत्यर्थः । हर्षवान्(वती) वा । 'दिष्ट्यापूर्वो वर्धतिरुत्सवे' इति सागरः । 'दिष्टिर्मुदि परीमाणे दिष्टिः कालोपदिष्टयोः ।' इति विश्वलोचनः । उत्सवे कारणमाह—**प्रकृतीति** । प्रकृतिं स्वभावम् । आपन्ना प्राप्ता । तत्प्राप्तिमेवाह—**आविर्भूत इति** । आविर्भूते प्रकटीभूते । रिच्यमाना रिक्तीभवन्ती । निशासंबन्धिनो हुतभुजोऽग्नेश्छिन्नभूयिष्ठो धूमो यस्या एतादृश्यर्चिर्ज्वालेव । 'अर्चिर्हेतिः शिखा स्त्रियाम्' इति त्रिकाण्डी । 'प्रायेणार्चिः स्त्री' इति क्षीरस्वामी । 'ज्वाला भासो न पुंस्यर्चिः' इत्यनेकार्थेऽपि । अन्तर्मध्ये रोधसस्तटस्य पतनेन कलुषा गङ्गेव । अन्तरन्तःकरणे मोहेन मुच्यमाना त्यज्यमानेयं वरतनुः प्रसादं प्रसन्नतां गच्छति प्राप्नोतीवेति लक्ष्यते । 'गृह्णतीव' इत्यपि

**चित्रलेखा**— सहि उव्वसि, वीसद्धा भव । आवण्णाणुकम्पिणा महाराएण पडिहदा क्खु दे तिदसपरिबन्थिणो हदासा दाणवा ।

**उर्वशी**— (चक्षुषी उन्मील्य ।) [2]किं पहावदंसिणा महिन्देण अब्भुववण्णम्हि ।

**चित्रलेखा**— [3]ण महिन्देण । महिन्दसरिसाणुभावेण राएसिणा पुरूरवसेण ।

**उर्वशी**— (राजानमवलोक्य । आत्मगतम् ।) [4]उवकिदं क्खु दाणवेन्दसंरम्भेण ।

**राजा**— (उर्वशीं विलोक्य । आत्मगतम् ।) स्थाने खलु नारायणमृषिं विलोभयन्त्यस्तदूरुसंभवामिमां विलोक्य व्रीडिताः सर्वा अप्सरस इति । अथवा नेयं तपस्विनः सृष्टिरित्यवैमि । कुतः ।

१. सखि उर्वशि, विस्रब्धा भव । आपन्नानुकम्पिना महाराजेन प्रतिहताः खलु ते त्रिदशपरिपन्थिनो हताशा दानवाः ।

२. किं प्रभावदर्शिना महेन्द्रेणाभ्युपपन्नास्मि ।

३. न महेन्द्रेण । महेन्द्रसदृशानुभावेन राजर्षिणा पुरूरवसा ।

४. उपकृतं खलु दानवेन्द्रसंरम्भेण ।

---

क्वचित्पाठः ॥ ९ ॥ **चित्रलेखा** । सखि उर्वशि, विस्रब्धा भव । आपन्नानुकम्पिना महाराजेन प्रतिहताः खलु ते त्रिदशपरिपन्थिनो हताशा दानवाः । विस्रब्धा विश्वासयुक्ता । आपन्नो विपद्ग्रस्तः । अनुकम्पिना दयावता । 'वीसद्धा भव' इत्यत्र 'ईर्त्सिंहजिह्वयोश्च' इति चकाराद्वेरीद्भावः ॥ **उर्वशी** । किं प्रभावदर्शिना महेन्द्रेणाभ्युपपन्नास्मि । अभ्युपपत्तिरनुग्रहः ॥ **चित्रलेखा** । न महेन्द्रे[ण] । महेन्द्रसदृशानुभावेन राजर्षिणा पुरूरवसा ॥ **उर्वशी** । आत्मगतलक्षणं तु—'अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतम् ।' इति साहित्यदर्पणे । 'स्वगतं चात्मगतं स्वयं (?) त्रिपताकेन पाणिना । यः पठेत्तत्र संयोज्यं द्वयमेतत्प्रयोक्तृभिः॥' इति सागरोऽपि । उपकृतं खलु दानवेन्द्रसंरम्भेण । संरम्भस्त्रासः कोपो वा । 'संरम्भः संभ्रमे कोपे' इति विश्वः॥ स्थाने युक्तम् । 'युक्ते द्वे सांप्रतं स्थाने' इत्यमरः । तपस्यतो नारायणस्य प्रलोभनार्थं गता अप्सरसस्तदूरूत्पन्नामिमामालोक्य

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः ।
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥ १० ॥

**उर्वशी**— हला चित्तलेहे, सहीअणो कहिं क्खु भवे ।

**चित्रलेखा**— सहि, अभअप्पदाई महाराओ जाणादि ।

**राजा**— (उर्वशीं विलोक्य ।) महति विषादे वर्तते सखीजनः । पश्यतु भवती ।

यदृच्छया त्वं सकृदप्यवन्ध्ययोः
पथि स्थिता सुन्दरि यस्य नेत्रयोः ।
त्वया विना सोऽपि समुत्सुको भवे-
त्सखीजनस्ते किमुतार्द्रसौहृदः ॥ ११ ॥

**उर्वशी**— (आत्मगतम् ।) अमिअं क्खु दे वअणम् । अहवा चन्दादो अमिअं त्ति किं अच्चरीअम् । (प्रकाशम् ।) अदो एव्व मे पेक्खिदं तुवरदि हिअअम् ।

१. सखि चित्रलेखे, सखीजनः कुत्र खलु भवेत् ।

२. सखि, अभयप्रदायी महाराजो जानाति ।

३. अमृतं खलु ते वचनम् । अथवा चन्द्रादमृतमिति किमाश्चर्यम् । अत एव मे प्रेक्षितुं त्वरते हृदयम् ।

---

यस्योरुत एतादृशी सुन्दरी निःसृता किमिदानीमस्माभिरेतादृशस्य प्रलोभनं विधेयमिति लज्जिताः पुनः प्रतिनिवृत्ता इति पौराणिकी कथाप्रथा । **अस्या इति** । सर्गविधावुत्पादनविधौ । प्रजापतिः स्रष्टा । पुष्पाकरो मासो वसन्तः । जडो मन्दप्रज्ञः । कान्तिप्रदत्वादीनि विशेषणानि हेतुगर्भाणि ॥ १० ॥ **उर्वशी** । सखि चित्रलेखे, सखीजनः कुत्र खलु भवेत् । खल्विति प्रश्ने ॥ **चित्रलेखा** । सखि, अभ[य]प्रदायी महाराजो जानाति ॥ **यदृच्छयेति**। यदृच्छया स्वेच्छया । अवन्ध्ययोः सफलयोः । 'वन्ध्योऽफलोऽवकेशी च' इत्यमरः । नेत्रयोः पथि स्थिता नयनगोचरीभूता । समुत्सुकः सोत्कण्ठः । आर्द्रं निरन्तरसहवासेन सरसं सौहृदं सौहार्दं यस्य सः ॥ ११ ॥ **उर्वशी** । अमृतं खलु ते वचनम् । क्वचित् 'अभिजातम्' इति पाठः । अभिजातं योग्यम् । अथवा चन्द्रादमृतमिति किमाश्च-

**राजा**—(हस्तेन दर्शयन् ।)

एताः सुतनु मुखं ते सख्यः पश्यन्ति हेमकूटगताः ।
उत्सुकनयना लोकाश्चन्द्रमिवोपप्लवान्मुक्तम् ॥ १२ ॥

(उर्वशी साभिलाषं पश्यति ।)

**चित्रलेखा**— [1]हला, किं पेक्खसि ।

**उर्वशी**— [2]णं समदुक्खगदो पिवीअदि लोअणेहिं ।

**चित्रलेखा**— (सस्मितम् ।) [3]अइ, को ।

**उर्वशी**— [4]णं पणइअणो ।

**रम्भा**— (सहर्षमवलोक्य ।) [5]हला, चित्तलेहादुदिअं पिअसहीं उव्वसीं गेण्हिअ विसाहासहिदो विअ भअवं सोमो समुवट्ठिदो राएसी ।

**मेनका**— (निर्वर्ण्य ।) [6]हला, दुवे वि णो एत्थ प्पिआ उवणदा । इअं पच्चाणीदा पिअसही, अअं च अपरिक्खदसरीरो राएसी दीसदि ।

१. सखि, किं प्रेक्षसे ।

२. ननु समदुःखगतः पीयते लोचनाभ्याम् ।

३. अयि, कः ।

४. ननु प्रणयिजनः ।

५. सखि, चित्रलेखाद्वितीयां प्रियसखीमुर्वशीं गृहीत्वा विशाखासहित इव भगवान्सोमः समुपस्थितो राजर्षिः ।

६. सखि, द्वे अपि नोऽत्र प्रिये उपनते । इयं प्रत्यानीता प्रियसखी, अयं चापरिक्षतशरीरो राजर्षिर्दृश्यते ।

र्यम् । प्रकाशम् । 'सर्वश्राव्यं प्रकाशं स्यात्' इति साहित्यदर्पणे । अत एव मे प्रेक्षितुं त्वरते हृदयम् ॥ **एता इति** । हेमकूटाख्यो गिरिः । उपप्लव उपरागः ॥ १२ ॥ **चित्रलेखा** । सखि, किं प्रेक्षसे ॥ **उर्वशी** । ननु समदुःखगतः पीयते लोचनाभ्याम् ॥ **चित्रलेखा** । अयि, कः ॥ **उर्वशी** । ननु प्रणयिजनः ॥ **रम्भा** । सखि, चित्रलेखाद्वितीयां प्रियसखीमुर्वशीं गृहीत्वा विशाखासहित [इ]व भगवान्सोमः समुपस्थितो राजर्षिः ॥ **मेनका** । सखि, द्वे अपि नोऽत्र प्रिये उपनते । इयं प्रत्या-

**सहजन्या**— [1]सहि, जुत्तं भणासि दुज्जओ दाणओ त्ति ।

**राजा**— सूत, इदं तच्छैलशिखरम् । अवतारय रथम् ।

**सूतः**— यदाज्ञापयत्यायुष्मान् । (इति तथा करोति ।)

(उर्वशी रथावतारक्षोभं नाटयन्ती सत्रासं राजानमवलम्बते ।)

**राजा**— (स्वगतम् ।) हन्त, सफलो मे विषयावतारः ।

यदिदं रथसंक्षोभादङ्गेनाङ्गं ममायतेक्षणया ।

स्पृष्टं सरोमकण्टकमङ्कुरितं मनसिजेनेव ॥ १३ ॥

**उर्वशी**— [2]हला, किं वि परदो ओसर ।

**चित्रलेखा**— [3]णाहं सक्केमि ।

**रम्भा**— [4]एत्थ पिअआरिणं संभावेम्ह राएसीम् ।

(सर्वा उपसर्पन्ति ।)

**राजा**— सूत, उपश्लेषय रथम् ।

यावत्पुनरियं सुभ्रूरुत्सुकाभिः समुत्सुका ।

सखीभिर्याति संपर्कं लताभिः श्रीरिवार्तवी ॥ १४ ॥

(सूतो रथं स्थापयति ।)

**अप्सरसः**— [5]दिट्ठिआ महाराओ विजएण वड्ढदि ।

१. सखि, युक्तं भणसि दुर्जयो दानव इति ।

२. सखि, किमपि परतोऽपसर ।

३. नाहं शक्नोमि ।

४. अत्र प्रियकारिणं संभावयामो राजर्षिम् ।

५. दिष्टया महाराजो विजयेन वर्धते ।

---

नीता प्रियसखी, [अ]यं चापरिक्षतशरीरो राजर्षिर्दृश्यत इति ॥ **सहजन्या** । सखि, युक्तं भणसि दुर्जयो दानव इति ॥ **यदिदमिति** । रथसंक्षोभान्निम्नोन्नतेषु स्यन्दनोपघातात् ॥१३॥ **उर्वशी** । सखि, किमपि परतोऽपसर ॥ **चित्रलेखा** । नाहं शक्नोमि ॥ **रम्भा** । अत्र प्रियकारिणं संभावयामो राजर्षिम् ॥ उपश्लेषय स्थापय ॥ **यावदिति** । संपर्कं संबन्धम् । आर्तवी ऋतुसंबन्धिनी ॥ १४ ॥ **अप्सरसः** । दिष्ट्या महाराजो विजयते(ये)न वर्त(र्ध)ते । दिष्ट्येत्यानन्दे । तथा

**राजा**— भवत्यश्च सखीसमागमेन ।

**उर्वशी**— (चित्रलेखादत्तहस्तावलम्बा रथादवतीर्य ।) [1]हला, वलिअं परिस्सजह । ण क्खु मे आसी आसासो जहा पुणो वि सहीअणं पेक्खिस्सं त्ति ।

(सख्यः परिष्वजन्ते ।)

**मेनका**— (साशंसम् ।) [2]सव्वहा कप्पसदं महाराओ पुहविं पालअन्तो होदु ।

**सूतः**—आयुष्मन्, पूर्वस्यां दिशि महता रथवेगेनोपदर्शितः शब्दः ।

अयं च गगनात्कोऽपि तप्तचामीकराङ्गदः ।
अधिरोहति शैलाग्रं तडित्वानिव तोयदः ॥ १५ ॥

**अप्सरसः**—(पश्यन्त्यः ।) [3]अम्मो, चित्तरहो ।

(ततः प्रविशति चित्ररथः ।)

**चित्ररथः**— (राजानं दृष्ट्वा सबहुमानम् ।) दिष्ट्या महेन्द्रोपकारपर्याप्तेन विक्रममहिम्ना वर्धते भवान् ।

**राजा**— अये गन्धर्वराजः । (रथादवतीर्य ।) स्वागतं प्रियसुहृदे ।

(परस्परं हस्तौ स्पृशतः ।)

१. सख्यः, अधिकं परिष्वजथ । न खलु मे आसीदाश्वासो यथा पुनरपि सखीजनं प्रेक्षिष्य इति ।

२. सर्वथा कल्पशतं महाराजः पृथिवीं पालयन्भवतु ।

३. अहो, चित्ररथः ।

---

चागदत्सागरः—'दिष्ट्येत्यानन्दने दिष्ट्यापूर्वो वर्धतिरुत्सवे ।' इति ॥ **उर्वशी ।** सख्यः, अधिकं परिष्वजथ । न खलु मे आसीदाश्वासो यथा पुनरपि सखीजनं प्रेक्षिष्य इति ॥ **मेनका ।** सर्वथा कल्पशतं महाराजः पृथिवीं पालयन्भवतु ॥ **अयमिति ।** गगनादाकाशात् । चामीकरं सुवर्णम् । 'चामीकरं जातरूपं महारजतकाञ्चने ।' इत्यमरः । अङ्गदं बाहुभूषणम् । शैलाग्रमधिरोहति । शैलाग्रे आरोहणं करोतीत्यर्थः । 'अवरोहति' इति पाठेऽवतरतीत्यर्थः । तडित्वांस्तडिद्युक्तः । तोयदोऽम्बुदः ॥१५॥ **अप्सरसः ।** अम्मो इत्याश्चर्ये । तथा च सागरः—'अम्मो अम्मह इत्येतद्विस्मयद्योतनाविधौ ।' इति ॥ [**चित्ररथः ।**] पर्याप्तेन समर्थेन । विक्रमम-

**चित्ररथः**— वयस्य, केशिना हृतामुर्वशीं नारदादुपश्रुत्य प्रत्याहरणार्थमस्याः शतक्रतुना गन्धर्वसेना समादिष्टा । ततो वयमन्तरा चारणेभ्यस्त्वदीयं जयोदाहरणं श्रुत्वा त्वामिहस्थमुपागताः । स भवानिमां पुरस्कृत्य सहास्माभिर्मघवन्तं द्रष्टुमर्हति । महत्खलु तत्रभवतो मघोनः प्रियमनुष्ठितं भवता । पश्य ।

पुरा नारायणेनेयमतिसृष्टा मरुत्वते ।
दैत्यहस्तादपाच्छिद्य सुहृदा संप्रति त्वया ॥ १६ ॥

**राजा**—सखे, मैवम् ।

ननु वज्रिण एव वीर्यमेत-
द्विजयन्ते द्विषतो यदस्य पक्ष्याः ।
वसुधाधरकंदराविसर्पी
प्रतिशब्दो हि हरेर्हिनस्ति नागान् ॥ १७ ॥

**चित्ररथः**—युक्तमेतत् । अनुत्सेकः खलु विक्रमालंकारः ।

**राजा**—सखे, नायमवसरो मम शतक्रतुं द्रष्टुम् । अतस्त्वमेवात्रभवतीं प्रभोरन्तिकं प्रापय ।

**चित्ररथः**—यथा भवान्मन्यते । इत इतो भवत्यः ।

(सर्वाः प्रस्थिताः ।)

---

हिम्ना पराक्रमातिशयेन ॥ स्वागतं प्रियसुहृदे इति 'चतुर्थी चाशिष्य–' इति चतुर्थी ॥ केशिना तन्नामकेन दानवेन । जयोदाहरणं यशः । **पुरेति** । मरुत्वते इन्द्राय । 'इन्द्रो मरुत्वान्मघवा' इति त्रिकाण्डी । अतिसृष्टा दत्ता । अपाच्छिद्य बल्व(ला)-दृ[ही]त्वा ॥ १६ ॥ **नन्विति** । वीर्यं पराक्रमः । पक्षे भवाः पक्ष्याः पार्श्ववर्तिनः । 'पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु ।' इति त्रिकाण्डी । द्विषतः शत्रून् । वसुधाधरः पर्वतः । कंदरा दरी । विसर्पी प्रसरणशीलः । प्रतिशब्दः प्रतिध्वनिः । हरेः सिंहस्य । नागान्गजान् । हिनस्ति मारयति ॥ १७ ॥ अनुत्से-

